अथ द्व्यशीतितमोऽध्यायः ।

भीष्म उवाच—

श्रुतं सूर्यस्य चन्द्रस्य भौमस्यापि प्रपूजनम् । बुधस्य सोमसूनोश्च पूजनं कथयाधुना ॥ १

पुलस्त्य उवाच—

तारागर्भसमुद्भूतो बुधश्चन्द्रकुमारकः । सौम्यः क्रूरग्रहो ज्ञेयः शुभाशुभप्रदो नृणाम् ॥ २

शराकारं मण्डलं तु बुधस्य परिकीर्तितम् । हिरण्मयसमैर्वर्णैश्चूर्णैः कुर्याच्च मण्डलम् ॥ ३

पूजयेत्तत्र गन्धाद्यैः पुष्पैर्धूपैः सुशोभनैः । दानं च विधिवत्कुर्याद्दशारिष्टे च गोचरे ॥ ४

कर्पूरं चैव मुद्रांश्च हरिद्वस्त्रं [१]हिरण्मयम् । सुवर्णं च यथाशक्त्या(क्ति) दद्याद्बोधनतुष्टये ॥ ५

सोमपुत्र महाप्राज्ञ वेदवेदाङ्गपारग । नमस्ते ग्रहमध्यस्थ प्रसन्नो भव मे सदा ॥ ६

इति स्तुत्वा महाराज बुधं भक्त्या समाहितः । [*प्राप्नुयान्निखिलान्कामान्सोमसूनुप्रसादतः] ७

गुरोश्च पूजनं प्रोक्तं पट्टिशाकारमण्डले । पीतवर्णैः सुनिष्पन्नैश्चूर्णै राजन्सुशोभनैः ॥ ८

पीतैर्गन्धयुतैः पुष्पैर्वस्त्रैर्हेम्ना च पूजयेत् । दशागोचरयोर्दौष्ट्ये दानं दद्याच्च शक्तितः ॥ ९

चणकद्विदलं चैव पीतवस्त्रं सुवर्णकम् । पुष्परागं तु विप्राय दद्याच्चारिष्टशान्तये ॥ १०

बृहस्पते सुराचार्य सर्वशास्त्रविशारद । दानेनानेन संतुष्टो भव सौम्यो ममाधुना ॥ ११

एवं कृते तु राजेन्द्र सानुकूलो भवेद्गुरुः । सर्वान्कामानवाप्नोति नरो गुरुसमर्चनात् ॥ १२

भार्गवस्य प्रवक्ष्यामि पूजनं नृपतेऽधुना । यत्कृत्वा सर्वकामाप्तिः सम्यक् पुंसां प्रजायते ॥ १३

पञ्चकोणं समुद्दिष्टं मण्डलं भार्गवस्य तु । चूर्णकैः श्वेतवर्णैश्च विधिना सुधिया कृतम् ॥ १४

श्वेतगन्धैश्च पुष्पैश्च वस्त्रैश्चापि सितैस्तथा । पूजयेद्भार्गवं भक्त्या नरः श्रद्धासमन्वितः ॥ १५

रौप्यं च दक्षिणादानं यथाशक्ति प्रकीर्तितम् । दशाद्यरिष्टे चोत्पन्ने सितमश्वं प्रदापयेत् ॥ १६

तण्डुलाः श्वेतवस्त्रं च रौप्यं चन्दनमेव च । कर्पूरं च सुगन्धाढ्यं देयं दानं द्विजातये ॥ १७

भृगुपुत्र महाभाग दानवानां पुरोहित । दानेनानेन संतुष्टो भव सर्वासुरार्चित ॥ १८

इति मन्त्रं समुच्चार्य दद्याद्दानं यथोदितम् । तस्य तुष्टो भवत्याशु भार्गवः कुरुनन्दन ॥ १९

शनैश्चरस्य पूजार्थं मण्डलं च नराकृति । कृत्वा चूर्णैः कृष्णवर्णैः पूजयेत्तत्र भक्तितः ॥ २०

कृष्णैर्गन्धैश्च पुष्पैश्च वस्त्रैश्चापि तथाविधैः । लोहं च दक्षिणादानं पिण्याकं च तिलस्य च ॥ २१

दानं शनैश्चरारिष्टे कृष्णां गां कृष्णवस्त्रकम् । सुवर्णं च यथाशक्ति दद्यान्नीलमणिं[२] तथा ॥ २२

सूर्यसूनो महाभाग च्छायापुत्र महाबल । अधोदृष्टे भव शने प्रसन्नोऽस्मात्प्रदानतः ॥ २३

एवं स्तुत्वा शनिं भक्त्या यश्च दद्याद्द्विजातये । सानुकूलो भवेत्तस्य शनिः [३]पाके(?)च गोचरे २४

राहोर्वर्णादिकं सर्वं शनिवन्मण्डलं तथा । सूर्याकारं समुद्दिष्टं तत्र पूजाऽर्कसूनुवत् ॥ २५

गोमेदं सर्पपाश्चैव तिला माषाश्च कृष्णकाः । महिषी च तथा छागो दानं राहोः प्रकीर्तितम् २६

सिंहिकासुत दैत्येन्द्र राहो चन्द्रार्कमर्दन । भव तुष्टो महाभाग दानेनानेन सुव्रत ॥ २७

केतोर्मण्डलकं कुर्याद्ध्वजाकृति सुशोभनम् । शनिवत्सकलं ज्ञेयं पूजावर्णादिकं नृप ॥ २८

सप्तधान्यं समुद्दिष्टं सस्वर्णं केतुदानकम् । एवं कृते सानुकूलौ भवेतां च नृणां नृप ॥ २९

* इदमर्धं क. ज. ञ. पुस्तकस्थम् ।

१ क. ट. ज. ञ. °म् । हरिन्मणिम्° । २ क. ख. च. ज. ञ. हरिन्मणिः । ३ झ. पापे ।

प्रदद्यातां धनं पुत्रान्सुखं सौभाग्यमेव च । आकृष्णेति रवेर्मन्त्र इमं देवास्तथा विधोः ॥ ३०
अग्निर्मूर्धेति भौमस्य मन्त्रो जप्ये तथाऽर्हणे । उद्बुध्यस्वेतीन्दुसूनोर्बृहस्पते गुरोस्तथा ॥ ३१
अन्नात्परीति शुक्रस्य शं नो देवीरयं शनेः । कया न इति राहोश्च केतोः केतुमिति स्मृतः ॥ ३२
एते मन्त्राः समुद्दिष्टा ग्रहाणां पूजने जपे । एवं कृते नृपश्रेष्ठ सानुकूलाऽ*खिला ग्रहाः ॥
भवन्ति पुंसां सततं यच्छन्ति च सुसंपदः ॥ ३३

एतन्महाराज मया समस्तं तुभ्यं समुद्दिष्टमिह क्रमेण ।
श्रुत्वा नरः सर्वश्रुतार्थसारमेतीश्वरस्यैव च संनिधानम् ॥ ३४
इदं पवित्रं यशसो निधानमिदं पितॄणामतिवल्लभं स्यात् ।
इदं च देवेष्वमृताय कल्पते पुण्यावहं पातकिनां च पुंसाम् ॥ ३५

इति पठति यशस्यं यः शृणोतीह भक्त्या
मधुमुरनरकारेरर्चनं वाऽथ पश्येत् ।
मतिमपि च जनानां यो ददातीन्द्रलोके
हरिशिवविबुधाद्यैः पूज्यते कल्पमेकम् ॥ ३६

य इदं शृणुयान्नित्यमृषीणां चरितं शुभम् । विमुक्तः सर्वपापेभ्यः स्वर्गलोके महीयते ॥ ३७
तपः कृते प्रशंसन्ति त्रेतायां ज्ञानमेव च । द्वापरे यज्ञमि(इ)त्याहुर्दानमेकं कलौ युगे ॥ ३८
सर्वेषामेव दानानामिदमेवैकमुत्तमम् । अभयं सर्वभूतानां नास्ति दानमतः परम् ॥ ३९
दानं प्रधानं शूद्रस्य प्राहेति भगवान्प्रभुः । दानेन सर्वकामाप्तिस्तस्य संजायते तपः ॥ ४०
पुण्यं पवित्रमायुष्यं सर्वपापविनाशनम् । पुराणमेतत्कथितं तीर्थश्राद्धानुवर्णनम् ॥ ४१
शृणोति यः पठेद्वाऽपि श्रीमान्संजायते नरः[1] । सर्वपापविनिर्मुक्तः सलक्ष्मीकं हरिं लभेत् ॥ ४२

इदं महाराज अगादि तुभ्यं पुण्यं महापातकनाशनं च ।
ब्रह्मार्करुद्रैश्च सुपूजितं च श्रोतव्यमेतत्प्रवदन्ति तज्ज्ञाः ॥ ४३

सृष्टिखण्डमिदं राजन्मया तुभ्यं प्रकीर्तितम् । पुराणस्याऽऽदिभूतं च नवधासृष्टिपौष्करम् ॥ ४४
द्विजेभ्यः श्रावयेद्विद्वान्यश्चैव शृणुयात्पठेत् । कल्पकोटिशतं साग्रं ब्रह्मलोके स मोदते ॥ ४५

इति श्रीमहापुराणे पाद्मे सृष्टिखण्डे पुराणावतारे ग्रहार्चनवर्णनं नाम व्यशीतितमोऽध्यायः ॥ ८२ ॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे पञ्चमं सृष्टिखण्डं समाप्तम् ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१६७३

---

अध्यायानामादितः समष्ट्यङ्काः—३४६

---

संधिरार्षः ।

---

१ ग. °रः । पुण्यं पवित्रमायुष्यं सर्वपापविनाशनम् । [इदं]पवित्रं यशसो °। २ घ. °पापोपशान्त्य°मलक्ष्मीनाशनं शुभम् । इदं पवित्रं यशसो निधानमिदं महापा° ।